अधि०　　अ० पा० पृ० पं०

४ सत्रे विद्वा॰असत्समानक-ल्पानामधिकार । ६ ६ ३०७ २४

१३ सत्रे शुक्लपशौ दौ गृहपतेरेव कर्तृत्वम् । १२ ४ ६८६ १०

१ सत्रे समानकल्पानां सहा-धिकारः । ६ ६ ३०५ १

६ सन्नयत्सन्नयदुभयस्यैवाभ्युदये प्रायश्चित्तम् । ६ ५ २९७ १

९ सप्तदशारत्नित्वस्य पशु-धर्मत्वम् । ३ १ ८९ १४

५ सप्तभिर्धुनोतीत्यनेनाग्नौ धूननाद्दृतीनां मन्त्राणामनि-यमेनोपादानम् । १० ५ ५१९ १

१५ समाख्यानुसारेण दक्षिणा-विभागः । १० ३ ४९२ १६

२० समाख्याप्राप्तकर्तृत्वस्य क्वचिद्बाधः । ३ ७ १७० १०

६ समाख्याया विनियोज-कत्वम् ३ ३ १११ ८

१३ समानतन्त्रयोः प्रकृतिविकृ-त्योः विकृतितन्त्रानुष्ठानम् । १२ २ ६६८ १६

२ समानमितरच्छ्येनेनेति श्रुत्या इषौ श्येनीयविशेष-धर्मातिदेशः । ७ १ ३३२ ८

१५ समानयनस्याज्यधर्मप्रयो-जकत्वम् । ४ १ १९३ २५

४ समास्वेव तिसृषु ऋक्षु गानम् । ९ २ ४०७ १२

२० समिदादीनां यागनामता । ९ २ ४२१ ५

अधि०　　अ० पा० पृ० पं०

२ समिदाद्यपूर्वभेदः । २ २ ५३ २६

२१ समुच्चितयोरनुवचनविषये मैत्रावरुणकर्तृकत्वम् । ३ ७ १७० २३

३ सर्वपृष्ठशब्देन षण्णां पृष्ठाना-मतिदेशः । ७ ३ ३४१ ४

४ सर्वपृष्ठेष्टौ [illegible]नुष्ठानम् । ३ ५ १३८ ३

१५ ३ ४ १३२ ६

१२ सर्वसोमानामुपरिष्टात् प्राजापत्यप्रचारः । ११ ३ ६३० ११

२५ सर्वस्वारे कार्यबाध्यव्यवस्था । १० २ ४७७ २७

२६ सर्वस्वारे यजमाने मृते ऽप्यायुराशंसनम् । १० २ ४७८ १

२१ सर्वेषामेव श्येनाङ्गानां नव-नीताज्यत्वम् । ३ ८ १८१ १५

१२ सवनीयपशुपुरोडाशयोः पशोरेव तन्त्रीत्वेन पाशु-कतन्त्रस्यैवादानम् । १२ २ ६६७ १२

८ सवनीयपशूनां समानविधान-त्वे प्रास्मा अग्निमिति मन्त्रे ऽनूहः ९ ३ ४२७ १४

२ सवनीयपशौ पशुपुरोडाशस्य कर्तव्यत्वम् । १२ २ ६६० २४

३ सवनीयपुरोडाशे हविष्कृदाह्वा-नस्याभावः । १२ २ ६६१ १५

६ सवनीयादिपशौ अग्नीषोमीय-धर्मातिदेशः । ८ १ ३५७ ५

अधि० अ० पा० पृ० पं०

२२ सवनीयानां मांसमयत्वम् । ३ ८ १८२ १
१६ सवनीये पुरोडाशे देवतोत्कर्षः । ११ ३ ६३१ २४
१४ सह शाखयेत्यस्य काण्डविधानार्थत्वम् । ६ ४ २९२ ५
१३ सहस्रसंवत्सरशब्दस्य सहस्रदिनपरत्वम् । ६ ७ ३१९ १०
२ सहस्राश्वप्रतिग्रहस्थले एकैकस्यैकदा सर्वधर्मानुष्ठानम् । ५ २ २३१ १२
४ सांग्रहणीष्टौ आमनहोमैरनुयाजानां समुच्चयः । १० ४ ५०२ १६
२ साकंप्रस्थाय्ये स्विष्टकृदवदानम् ३ ५ १२७ १६
५ साकमेधे वारुणप्रघासिकैककपालातिदेशः । ७ १ ३३४ ८
८ साङ्गस्यावभृथस्य अप्स्वनुष्ठानम् । ११ २ ६१० २७
२१ सादनस्यापि प्रतिकर्षः । १० ५ ५३१ ११
१८ साद्यस्क्रे त्रिवत्सेन सर्वेषां क्रयार्थानां बाधः । १० ३ ४९६ ७
६ साद्यस्क्रे स्थारवाहुतिबाधः । १० १ ४५३ २१
९ साधुपदप्रयोगनियमः । १ ३ २८ १
१७ सान्तपनीयाया अग्निहोत्रानुत्कर्षकत्वम् । ५ १ २२९ १५
१९ सामर्थ्यानुसारेण व्यवस्था । १ ४ ३९ २३
११ सामलक्षणम् । २ १ ५० १५
८ सामान्यश्रुतिकल्पनम् । १ ३ २६ १४
२ सामिधेनीनां सप्तदशसङ्ख्याया विकृतिगामित्वम् । ३ ६ १४९ ९
३ सामिधेनीषु आगन्तूनामन्ते निवेशः । ५ ३ २३९ ९
८ सामिधेनीष्ववशिष्टानामागमेन संख्यापूरणम् । १० ५ ५२१ १२
२ साम्नः ऋक्संस्कारकर्मत्वम् । ९ २ ४०५ १४
८ साम्ना स्तुवते इत्यस्यैव विधित्वम् । ९ २ ४१३ १३
१७ सारस्वत्यां मेष्यामध्रिगुवचनाभावः । ९ १ ४०० ७
११ सावित्रहोमादीनां दीक्षणीयापूर्वत्वम् । ५ २ २३२ १८
११ सुत्याकालिकस्य सुब्रह्मण्याह्वानस्य भेदेनानुष्ठानम् । ११ ३ ६२५ १
१६ सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यामूहः । ९ १ ३९८ १६
८ सुवर्णधारणादीनां पुमर्थत्वम् । ३ ४ १२७ १०
५ सूक्तवाकस्य प्रस्तरप्रहरणाङ्गकत्वम् । ३ २ ९७ १८
६ सूक्तवाकानामर्थानुसारेण विनियोगः । ३ २ ९८ २०
१५ सूक्तवाके यजमानशब्दस्योहः । ९ १ ३९८ १२
३ सोमक्रयसाधनानामजादीनां समुच्चयः । १२ ४ ६८७ ३

अधि० अ० पा० पृ० प०

९ सोमविकाराणां दर्शपूर्णमासाभ्यामूर्ध्वं कर्तव्यत्वम् । ५ ४ २५४ १५

१५ सोमविक्रेतुः पृथक्त्वम् । ३ ७ १६७ २२

८ सोमात्मान्नाद्यविकारादीनामुत्कर्षः ५ ४ २५४ ६

१५ सोमादीनां दर्शपूर्णमासोत्तरकालत्वम् । ४ ३ २१० १

३ सोमे ऐष्टिकधर्मातिदेशः । ८ १ ३५५ २०

३ सोमे दार्शिकवेदेरकरणम् । १२ १ ६५० ५

४ सोमे दार्शिकैः स्रुगादिभिः पात्रैः सान्नाय्यादिहोमः । १२ १ ६५० २१

६ सोमे शेषभक्षास्तित्वम् । ३ ५ १३८ २१

३ सौत्रामण्यां शेषानुष्ठानम् । ३ ५ १३७ २१

१२ सौत्रामण्यादीनां चयनाद्यङ्गत्वम् । ४ ३ २०८ १६

३ सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यत्वम् । ४ ३ २११ १

१२ सौभरनिधनयोः कामैक्यम् । २ २ ६३ १२

१८ सौमापौष्णपशौ खादिरयूपस्य नियमः । १० ७ ५६६ १३

३ सौमिकवेद्यादीनामुभयार्थत्वम् ३ ७ १६२ ९

१३ सौमेन्द्रचरोर्यजमानपानव्याप्तिविषयत्वम् । ३ ४ १३० १६

३ सौम्यादीनामुपसत्कालत्वम् । ४ ४ २१२ १५

१८ सौर्यचरावभ्यूहनबाधः । १० १ ४६६ १

१६ सौर्यचरावुपधानबाधः । १० १ ४६५ २१

११ सौर्यचरोः स्थाल्यामेव पाकः । १० १ ४६३ २५

१९ सौर्यचरौ ज्वलनबाधः । १० १ ४६६ ५

१७ सौर्यचरौ पृथुश्लक्ष्णबाधः । १० १ ४६५ २५

१२ सौर्यचरौ पेषणबाध । १० १ ४६४ २४

२० सौर्यचरौ व्युद्धृत्यासादनबाधः । १० १ ४६६ ८

१५ सौर्यचरौ संतापनबाधः । १० १ ४६५ १६

१३ सौर्यचरौ सवपनबाधः । १० १ ४६५ ८

१४ सौर्यचरौ संवपनबाधः । १० १ ४६५ १२

१० सौर्ययागे चरुशब्दस्यौदनवाचित्वम् । १० १ ४६१ २२

१८ सौर्यादिषु पार्वणहोमाद्यननुष्ठानम् । ९ २ ४१९ १७

१६ सौर्ये आग्नेयधर्मातिदेशः । ८ १ ३६० १३

१५ सौर्ये चरौ अभिमर्शनद्वयस्य विकल्पः । ८ १ ३६० १

१ सौर्ये चरौ इतिकर्तव्यतावत्त्वम् । ७ ४ ३४८ १६

| अधि० | | अ० | पा० | पृ० | पं० |
|---|---|---|---|---|---|
| ५ | स्तोत्रादिप्राधान्यम् | २ | १ | ४५ | १ |
| ११ | स्तोभलक्षणम् । | ९ | २ | ५१६ | ११ |
| ५ | स्थानस्य विनियोजकत्वम् | ३ | ३ | ११० | १५ |
| ५ | स्फ्यादीनां व्यवस्थितत्वम् । | ३ | १ | ८५ | १९ |
| १ | स्मृतिप्रामाण्यम् । | १ | ३ | २२ | १४ |
| १० | स्वरसामादिशब्देन धर्मातिदेशः । | ७ | ३ | ३४५ | ५ |
| २ | स्वरस्य दीक्षणीयापूर्वप्रयुक्तत्वम् । वर्णान्तरम् | ९ | १ | ३८६ | ८ |
| १८ | स्वरोः पश्वङ्गत्वम् । | ४ | ४ | २१६ | २० |
| ५ | स्वरोः साधारण्यम् । | ११ | ३ | ६२० | २६ |
| १ | स्वरोश्छेदनाद्यप्रयोजकत्वम् | ४ | २ | १९६ | १८ |
| २ | स्वर्दृक्शब्देन वीक्षणस्य कालार्थता । | १० | ६ | ५३७ | १० |
| ७ | स्वामिनः प्रतिनिध्यभावः | ६ | ३ | २७६ | ११ |
| २ | स्वामिसंस्काराणां प्रधानार्थत्वम् | ३ | ७ | १६१ | २६ |
| २ | स्विष्टकृदर्थावत्तनाशे पुनरवदानाभावः । | ६ | ४ | २८४ | १२ |
| १७ | हविर्देवतयोर्विकल्पे हविः सामान्यस्य बलीयस्त्वम् । | ८ | १ | ३६१ | ६ |
| ७ | हविर्धाने शकटान्येन औषधद्रव्यकाणां पुरोडाशानां निर्वापः । | १२ | १ | ६५१ | २५ |
| ७ | हविर्धानस्य सामिधेन्यनङ्गत्वम् । | ३ | १ | १६४ | ५ |
| २१ | हविष्कृदादिमन्त्राणामावृत्तिः । | ११ | ४ | ६४५ | २३ |
| १४ | हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गत्वम् । | ३ | १ | ९२ | १४ |
| ३ | हिरण्यगर्भ इत्यादिमन्त्रस्योत्तराघारे गुणत्वम् | १० | ३ | ४८४ | ११ |
| ३ | हेतुवन्निगदाः । | १ | २ | १६ | १ |
| १० | होतुराध्वर्यवकरणमन्त्रानुष्ठातृत्वम् । | ३ | ८ | १७७ | ९ |
| १ | होमपदार्थनिरूपणम् | ४ | २ | २०२ | १३ |
| ११ | होमाभिषवयोरपि तन्निमित्तत्वम् । | ३ | ५ | १४२ | ११ |
| ७ | होमाभिषवोभयकर्तुरेव भक्षणम् । | ६ | ४ | २८८ | २१ |
| १६ | होत्राणां मन्त्राणां समुच्चयः | १२ | ३ | ६७८ | १२ |


## जैमिनीयानामधिकरणनां सूची समाप्ता ।

॥ श्रीगणेशाय नमः ॥

# जैमिनिसूत्रवृत्तिः सुबोधिनीनामिका ।

## श्रीशितिकण्ठभट्टकृता

---

नत्वा श्रीत्रिपुरामम्बां तत्पुत्रं श्रीगणाधिपम् ।
जैमिनिं भाष्यकारं च कुर्वे वृत्तिं सुबोधिनीम् ॥ १ ॥

शास्त्रारम्भसमर्थनम् । अधि० १ ।

### अथातो धर्मजिज्ञासा ॥ १ ॥

तत्र द्वादशभिरध्यायैः प्रतिपाद्यमानं शास्त्रमारम्भणीयं न वेति संशये स्वाध्यायो ऽध्येतव्य इति विहिताध्ययनस्य फलाकाङ्क्षायां विश्वजिन्न्यायेन स्वर्ग एव(१) फलं कल्प्यम् । तथा चाक्षरग्रहणमात्रेण स्वर्गसिद्धौ विचारशास्त्रस्य अकिञ्चित्करत्वाद्विचारशास्त्रं नारम्भणीयमिति बहिः पूर्वपक्षे सिद्धान्तमाह । अथेति । अथ गुरुकुलस्थितिपूर्वकवेदाध्ययनानन्तरम् अतः यतः अध्ययनस्य अर्थज्ञानं फलमतः धर्मस्य वक्ष्यमाणलक्षणस्य जिज्ञासा ज्ञानेच्छा साध्यो विचारः(२) कर्तव्य इति शेषः । अयं भावः । दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वाद्(३) अध्ययनेन तदर्थनिश्चयसम्पादनस्यैवोचितत्वाद् अर्थतत्त्वज्ञानस्य विचारशास्त्रमन्तरा ऽसम्भवाद् इदं विचारशास्त्रमवश्यारम्भणीयमिति ॥१॥

धर्मलक्षणम् । अधि० २ ।

### चोदनालक्षणो ऽर्थो धर्मः ॥ २ ॥

अथातो धर्मजिज्ञासेत्यत्र को धर्म इति जिज्ञासायां धर्मस्वरूप-

---

(१) अर्थावबोधफलकत्वे विध्यानर्थक्यप्रसङ्गः तस्य विचाराधीनत्वात्तदर्थं गुरुकुले एव वासापत्तौ वेदमधीत्य स्नायादितिस्मृतिबोधितस्यस्नाने वेदाध्ययनानन्तर्यस्य बाधापत्तिश्चेति भावः । स्वर्गलक्षणं तु यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमिति ।

(२) जिज्ञासापदस्य लक्षणया एतदर्थलाभः । इच्छाया विधातुं निषेद्धुं वा ऽशक्यत्वात् । (३) अदृष्टं स्वर्गफलं कल्पनीयमध्ययने तत्साधनत्वं चेत्युभयकल्पनापेक्षया क्लृप्तार्थबोधसाधनत्वकल्पनायां लाघवात् । न च विध्यानर्थक्यम् । नियमार्थत्वात् । क्त्वाप्रत्ययस्तु पूर्वकालमेव बोधयति न त्वानन्तर्यमिति न स्मृतिबाधापत्तिरिति भावः ।

ज्ञानार्थं लक्षणमाह । चोदनेति । चोदनेति प्रवर्त्तकशब्दनाम । लक्ष्यते ज्ञायते अनेनेति लक्षणम् । यथा धूमेन वह्निर्लक्ष्यतइति वह्निज्ञाने लक्षणं धूमः तद्वद्धर्मज्ञाने लक्षणं चोदना । इत्थं च चोदना चोदनैव लक्षणं करणं यद्विषयकज्ञानस्य तत्त्वे सति अर्थत्वं लक्षणम् । अर्थत्वं च सुखाधिकदुःखाजनकत्वम् । इदं च श्येनयागे धर्मत्वनिवृत्त्यर्थम् । एतेन चोदनातिरिक्तेन्द्रियादिगम्यत्वं धर्मस्य नेत्यपि सूचितम् ॥२॥

धर्मप्रमाणस्य विचार्यत्वम् अधि०

## तस्य निमित्तपरीष्टिः ॥ ३ ॥

इतरप्रमाणानि तत्र प्रसरन्ति न वेति संशयस्य परीक्षां विना निवृत्त्यसम्भवात् तत्परीक्षां प्रतिजानीते । तस्येति । तस्य धर्मविषयकतत्त्वज्ञानस्य निमित्तं करणं तस्य परीष्टिः परीक्षा युक्तिपूर्वकसाधकतर्ककलापैर्विचारः कर्त्तव्य इति शेषः ॥ ३ ॥

प्रत्यक्षस्य धर्मप्रमापकत्वाभावः । अधि० ४ ।

## सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भात्(१) ॥ ४ ॥

प्रतिज्ञातमेवार्थं विशदयति सत्सम्प्रयोगइति । पुरुषस्येन्द्रियाणांसति विद्यमाने विषये सम्प्रयोगे संयोगे सति यद् बुद्ध्याः ज्ञानस्य जन्म तत्प्रत्यक्षम् । ईदृशं यत्प्रत्यक्षं तद्धर्मज्ञाने निमित्तं नोत्पादकं प्रत्यक्षप्रमासाधनीभूतानीन्द्रियाणि धर्मप्रमां न साधयन्तीति फलितम् । तत्र हेतुमाह विद्यमानस्य वर्त्तमानस्यैव वस्तुनः इन्द्रियैरुपलम्भात् । धर्मस्य ज्ञानकाले ऽसत्त्वेन इन्द्रियायोग्यत्वादिति भावः । इन्द्रियाणां तन्निमित्तत्वनिराकरणेन व्याप्तिज्ञानसादृश्यार्थापत्तीनां तन्निमित्तत्वं निरस्तम् । तेषां सर्वेषां प्रत्यक्षफलत्वात् । अतः चोदनामात्रगम्य(२)त्वमेवेति सिद्धम् ॥ ४ ॥

---

(१) विद्यमानोपलम्भनत्वादिति शाबरभाष्यादिसंमतः पाठः । (२) ननु शक्तिग्रहस्य वृद्धव्यवहारमूलकत्वेन प्रत्यक्षानुमानमूलकत्वाद्धर्मे असम्भवेन चोदनाया अपि तत्र प्रामाण्यं कथमिति चेन्न । इह सहकारतरौ मधूनि मधुकरः पिबतीत्यादौ समभिव्याहारादपि मधुकरशब्दादेः शक्तिग्रहदर्शनेन चोदनाया अपि तथा सम्भवात् ।

धर्मे वेदस्य स्वतः प्रामाण्यम् । अधि० ५ ।

**औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशो ऽव्यतिरेकश्चार्थे ऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥**

शब्दार्थयोरुत्पत्त्यनन्तरं पुरुषेण कल्पितसङ्केतात्मकसंबन्धस्य कल्पितत्वात्पुरुषकल्पितसंबन्धज्ञानापेक्षत्वाच्छब्दस्य यथा प्रत्यक्षज्ञानं शुक्तिकादौ सत्यत्वं व्यभिचरति यथा पुरुषाधीनत्वेन शब्दे ऽपि सत्यत्वव्यभिचारसम्भवान्न धर्मे चोदना प्रमाणमिति पूर्वपक्षे सिद्धान्तमाह । औत्पत्तिक इति । शब्दस्य नित्यवेदघटकपदस्य अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादेः अर्थेन तत्प्रतिपाद्यार्थेन संबन्धः शक्तिरूपः औत्पत्तिकः स्वाभाविकः(१) नित्य इति यावत् । अतः तस्य धर्मस्य ज्ञानम् अत्र करणे ल्युट् धर्मे यथार्थज्ञानस्य करणम् । ननु पर्वतो वह्निमानिति श्रुत्वा ऽपि प्रत्यक्षेण वह्निं दृष्ट्वा शाब्दे प्रमाणत्वं गृह्णातीति लोके प्रसिद्धं तथा च प्रत्यक्षादीतरप्रमाणसापेक्षत्वात्कथं धर्मे प्रमाणमत आह । अनुपलब्धइति । अनुपलब्धे प्रत्यक्षादिप्रमाणैरनुपलब्धे ऽर्थे उपदेशः अव्यतिरेकः अर्थाव्यभिचारी दृश्यते अत इतरानपेक्षत्वात् प्रत्यक्षाद्यनपेक्षत्वात् तद्विधिघटितवाक्यं धर्मे प्रमाणं बादरायणाचार्यस्य अनुमतम् । अयं भावः पर्वतो वह्निमानिति दोषवत्पुरुषप्रयुक्तमर्थं व्यभिचरत्यतः प्रामाण्यनिश्चये प्रत्यक्षादिकमपेक्षते तथाग्निहोत्रं जुहोतीति वाक्यं कालत्रये ऽप्यर्थं न व्यभिचरति अत इतरनिरपेक्षं(२) धर्मे प्रमाणमिति ॥ ५ ॥

शब्दस्य नित्यत्वम् । अधि० ६ ।

**कर्मैके तत्र दर्शनात् ॥ ६ ॥**

पूर्वाधिकरणे शब्दार्थयोः संबन्धो नित्य इत्युक्तं तच्च शब्दनित्य-

---

(१) उत्पत्तिशब्देन लक्षणया स्वभाव उच्यते इति भावः । (२) यद्यपि लोके प्रमाणान्तरमूलानां नद्यास्तीरे फलानि सन्तीत्यादिवाक्यानां प्रामाण्यं दृश्यते अतन्मूलानां चाप्रामाण्यं तथापि न प्रामाण्यस्य सापेक्षत्वम् । अनाप्तवाक्यस्य तु दुष्टमूलतया शब्दस्य दुष्टत्वेन स्वाभाविकस्य प्रामाण्यस्य अपवादादप्रामाण्यम् । वेदस्य तु अपौरुषेयत्वेन पुरुषदोषसंबन्धाभावात्स्वतः प्रामाण्यमपवादरहितं भवतीति भावः ।

तदधीनमिति तत्सिसाधयिषुः प्रथमं शब्दानित्यत्ववादिमतं पूर्वं पक्षमुपपादयति । कर्मेति । एके नैयायिकाः कर्म अनित्यं शब्दं वदन्ति तत्र शब्दविषयकप्रयत्नदर्शनात् (१) । यद्विषयः प्रयत्नः सोऽनित्य इति व्याप्तेः ॥ ६ ॥

अस्थानात् ॥ ७ ॥

किं च अस्थानात् अस्थिरत्वात् क्षणादूर्ध्वमनुपलब्धेरिति भावः ॥ ७ ॥

करोतिशब्दात् ॥ ८ ॥

किं च करोतिशब्दात् । यथा घटं करोतीति तथा शब्दं करोतीति अनित्यव्यवहारात् ॥ ८ ॥

सत्त्वान्तरे यौगपद्यात् ॥ ९ ॥

इतोऽप्यनित्य इत्याह । सत्त्वान्तरइति । देशान्तरइत्यपि पूरणीयम् । तथा च देशान्तरे अन्यदेशस्थे सत्त्वान्तरे प्राण्यन्तरप्रत्यक्षे यौगपद्यमेककालिकत्वं दृष्टम् । अयं भावः यथा लाघवान्नित्यत्वं तथा तेनैव हेतुना शब्दे एकत्वमपि सेत्स्यति । इत्थं च एकस्य वस्तुनः अपकृष्टपरिमाणस्य सन्निकृष्टविप्रकृष्टपुरुषप्रत्यक्षं युगपद् भवति इदमेकत्वे नित्यत्वे ऽनुपपन्नमतो ऽनित्यः शब्दो नाना चेति ॥९॥

प्रकृतिविकृत्योश्च ॥ १० ॥

इतोऽपि तथेत्याह । प्रकृतीति । दध्यत्रेति दधि अत्रेति प्रकृतिस्थितौ प्रकृतिभूतेकारस्थाने यकाररूपो विकारो भवति यस्याः प्रकृतेः विकारः सोऽनित्य इति व्याप्तिरिति भावः ॥ १० ॥

वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥

कर्तृभूम्ना कर्तृबाहुल्येनास्य शब्दस्य वृद्धिः महत्त्वं दृश्यते अतोऽप्यनित्यः । पुरुषप्रयत्नस्य शब्दव्यञ्जकत्वपक्षे व्यञ्जकसहस्रेणापि [illegible]द्धिर्न दृश्यते यथा दीपसहस्रेणापि घटस्य । अतः

(१) प्राक् प्रयत्नादस्तीत्यत्र प्रमाणाभावेन नाभिव्यञ्जकत्व प्रयत्नस्येति वक्तुं शक्यते इति भावः ।

व्यञ्जकत्वपक्षो ऽयुक्त इति भावः ॥ ११ ॥

**समं तु (१) तत्र दर्शनम् ॥ १२ ॥**

एवं व्यञ्जकत्वे बहूनि दूषणान्युक्तानि क्रमेण परिहर्तुं प्रक्रमते । सममिति । मतद्वयइति क्षणमिति च शब्दद्वयं पूरणीयम् । मतद्वये क्षणं क्षणमात्रं दर्शनं शब्दप्रत्यक्षं सममविवादम् ॥ १२ ॥

**सतः परमदर्शनं विषयानागमात् ॥ १३ ॥**

समत्वे ऽपि कतमः पक्षो वरिष्ठ इति प्रश्ने व्यङ्ग्यत्वपक्षो युक्त इत्याह । सत इति । सतः सर्वदाविद्यमानस्य परं पूर्वोत्तरकाले अदर्शनं प्रत्यक्षाभावः संस्कर्त्तु व्यञ्जकस्य विषयं शब्दं प्रत्यनागमात् । अयं भावः । स एवायं गकार इति प्रत्यभिज्ञानाद् लाघवाच्च शब्दो नित्यः मुखोद्भवायुसंयोगविभागाः शब्दप्रत्यक्षप्रतिबन्धकीभूतं स्तिमितवायुं दूरीकुर्वन्तीति (२) सतः प्रत्यक्षमिति अस्थानादित्यस्योत्तरम् ॥ १३ ॥

**प्रयोगस्य परम् ॥ १४ ॥**

करोतिशब्दादित्यस्योत्तरमाह । प्रेति । शब्दं करोतीत्यत्र करोतिपदं प्रयोगस्य उच्चारणस्य परं तत्तात्पर्यकम् ॥ १४ ॥

**आदित्यवद्यौगपद्यम् ॥ १५ ॥**

सत्त्वान्तरे यौगपद्यादित्यस्योत्तरमाह । आदित्यवदिति । यथा एकः सूर्यः नानादेशस्थैः युगपदीक्ष्यते तथा आदित्यवद् महान् शब्दो न सूक्ष्म इति भावः ॥ १५ ॥

**शब्दान्तरमविकारः ॥ १६ ॥**

प्रकृतिविकृत्योश्चेत्यस्योत्तरमाह । शब्दान्तरमिति । इकारस्थाने

---

(१) तु शब्दात्पक्षो विपरिवर्तते ।

(२) ननु स्तुग्नस्थैः मुखोद्भवायुसंयोगविभागैः स्तिमितवायुदूरीकरणे आकाशस्यैकत्वाद्देशान्तरेष्वपि शब्द उपलभ्येतेतिचेन्न । स्वरूपत आकाशस्यैकत्वे ऽपि उपाधिभूतानां कर्णशष्कुलीनां भेदाद्दूरस्थानां कर्णशष्कुलीनामुपकारकत्वस्य संयोगविभागेष्वभावेन उपलम्भशङ्काऽभावात् ।

यकारः शब्दान्तरमन्यः शब्दः न इकारस्य विकारः तृणानां कट इव तथा सति कटकर्त्रा नियमेन तृणसम्पादनवद् यकारं प्रयुञ्जन् नियमेन इकारमादद्याद् इति भावः ॥ १६ ॥

## नादवृद्धिःपरा ॥ १७ ॥

वृद्धिश्चेत्यस्य उत्तरमाह । नादेति । पराऽतिशयिता शब्दवृद्धिरिति भ्रमविषया नादवृद्धिः । बहुभिः भेरीमाघ्नद्भिः वर्णात्मकशब्दमुच्चारयद्भिर्वा महान् शब्द इत्युपलभ्यते । तत्र परमते प्रतिपुरुषं शब्दावयवा उत्पन्नाः सन्तः तूल महत्त्ववच्छब्दे महत्त्वं सम्पादयन्तीति वक्तुमशक्यम् । परमते शब्दस्य गुणत्वेन निरवयवत्वादतः अगत्या कर्णशष्कुलीमण्डलस्य सर्वां सरणिं व्याप्नुवद्भिः संयोगविभागैः नैरन्तर्येण असकृद् ग्रहणाद् महानिवावयववानिव च प्रतीयते । संयोगविभागा नादपदवाच्याः तेषामेव वृद्धिरिति भावः ॥ १७ ॥

## नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

एवं परप्रतिपादितदूषणान्युद्धृत्य स्वमते साधकं वक्तुं प्रक्रमते । नित्य इति शब्दः नित्यः स्याद् दृश्यते व्यज्यते शब्दो ऽनेनेति दर्शनमुच्चारणं तस्य परार्थत्वाद् अन्यस्यार्थस्य प्रतिपत्त्यर्थत्वात् । अनित्यत्वे श्रोतुरर्थप्रतिपत्तिपर्यन्तं न तिष्ठतीति प्रतिपत्तिर्न स्यात् कारणाभावादिति भावः ॥ १८ ॥

## सर्वत्र यौगपद्यात् ॥ १९ ॥

किं च सर्वत्र गोशब्दमात्रे यौगपद्याद् अबाधितप्रत्यभिज्ञाया युगपदुत्पत्तेः । स एवायं गकार इति युगपदनेकेषां भवति न ह्यनेके युगपद् भ्रान्ताअभवन्निति भावः ॥ १९ ॥

## संख्याभावात् ॥ २० ॥

दशकृत्वः गोशब्दोच्चारे दशवारमुच्चारितो गोशब्द इत्येव वदन्ति न च दश गोशब्दा उच्चारिता इति । अतोऽपि शब्दो नित्य इत्याह । सङ्ख्येति । शब्दे सङ्ख्याभावात् स्पष्टम् ॥ २० ॥

अनपेक्षत्वात् ॥ २१ ॥

इतो ऽपि नित्य इत्याह । अनपेक्षत्वादिति । अनपेक्षत्वाद् शब्दनाशकारणस्य पामरादिसाधारण्येन ज्ञानाभावाद् यथा घटपटादिदर्शनमात्रे असमवायिकारणादिनाशान्नाश इति निश्चिनोति तथा पामराणां शब्दे नाशकारणनिश्चयाभावान्नित्य इति भावः ॥ २१ ॥

प्रख्याभावाच्च योग्यस्य ॥ २२ ॥

ननु शब्दो वायुपरमाणुप्रकृतिकः तदीयसंयोगैरुत्पन्नत्वात् । तथा च शिक्षा । "वायुरापद्यते शब्दतामिति" । वायुपरमाणुप्रकृतिकत्वादनित्य इत्याशङ्कायामाह । प्रख्येति । योग्यस्य श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयस्य शब्दस्य प्रख्याभावात् । वायुविकारस्य श्रोत्रेन्द्रियाग्राह्यत्वादिति भावः ॥ २२ ॥

लिङ्गदर्शनाच्च २३ ॥

लिङ्गेति । वाचा विरूप नित्ययेति मन्त्रे नित्यया वाचेति लिङ्गम् ॥ २३ ॥

वेदस्यार्थप्रत्यायकत्वम् । अधि० ७ ।

उत्पत्तौ वा रचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥

एवं शब्दस्य शब्दार्थसम्बन्धस्य च नित्यत्वे ऽपि चोदना धर्मे न प्रमाणमित्याक्षिपति । उत्पत्ताविति । उत्पत्तौ पदार्थज्ञानोत्पत्तौ सत्यां वाक्यवाक्यार्थयोः संबन्धा रचनाः पुरुषकल्पिताः स्युः अर्थस्य वाक्यार्थज्ञानस्य अतत्पदार्थज्ञानभिन्नं निमित्तं कारणं यस्य तत्त्वात् । न हि पदार्थ एव वाक्यार्थः । अतः पदस्य पदार्थे यथा शक्तिसंबन्धः तथा पदसमूहरूपवाक्यस्य वाक्यार्थे न शक्तिसंबन्धः किं त्वन्यः स च पुरुषकल्पित इति कृत्रिमः कथं धर्मे प्रमाणमिति पूर्वपक्षसूत्राभिप्रायः ॥ २४ ॥

तद्भूतानां क्रियार्थेन समाम्नायो ऽर्थस्य तन्निमित्तत्वात् ॥२५॥

सिद्धान्तमाह । तद्भूतानामिति । तेषु अग्निहोत्राद्यर्थेषु क्लृप्तानां प्रत्येकपदानां क्रियार्थेन क्रियावाचिना पदेनसह समाम्नायः पठनं दृश्यते

अतः क्रियावाचकपदघटितपदसमूहादेव अपूर्वो वाक्यार्थग्रह अर्थस्य वाक्यार्थज्ञानस्य तन्निमित्तत्वात् तत्पदार्थज्ञानं निमित्तकारणं यस्य तत्त्वात्। अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यत्र च अग्निहोत्रनामकहोमेन स्वर्गं भावयेदिति वाक्यार्थज्ञानं न पदार्थोपस्थितिमन्तरा भवति किंतु पदादुपस्थितानामर्थानां योग्यतया परस्परसंबन्धज्ञानमेव वाक्यार्थज्ञानमिति भावः ॥ २५ ॥

**लोके सन्नियमात् प्रयोगसन्निकर्षः स्यात् ॥ २६ ॥**

लोके लौकिकशब्दे पदार्थं दृष्ट्वा पदार्थज्ञानपूर्वकं सन्नियमात् प्रयोगाद्वेदे ऽपि गुरुपरम्परया ज्ञानपूर्वकः प्रयोगस्य सन्निकर्षः उपपत्तिः स्यात् ॥ २६ ॥

वेदस्यापौरुषेयत्वम् । अधि- ८ ।

**वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥**

वेदस्यानित्यत्वात् पौरुषेयत्वाद् धर्मे न प्रमाणं पुरुषदोषसम्भवादिति पुनराक्षिपति । वेदानिति । यत; पुरुषाख्याः (१) काठकं कौथुममिति पुरुषघटिताः आख्याः नामानि अतः सन्निकर्षमाधुनिकं सादीन् (२) । असमानवचनत्वं चिन्त्य विस्तरभयाद् बालबोधार्थत्वान्न लिख्यते । एके नैयायिका आहुः ॥ २७ ॥

**अनित्यदर्शनाच्च ॥ २८ ॥**

इतो ऽप्यनित्य इत्याह । अनित्येति । अनित्यानां जननमरणवतां पुरुषाणां, बबरः प्रावाहणिरकामयत कुसुरुविन्द औद्दालकिरकामयतेत्यादि वेदेषु दर्शनात् तेषां पुरुषाणां जननात् प्राग इमानि वाक्यानि नासन्निति सादित्वादनित्यत्वं पौरुषेयत्वं सिद्धम् ॥ २८ ॥

**उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥**

सिद्धान्तमाह । उक्तमिति शब्दे पूर्वत्वं नित्यत्वमुक्तम् साधितं

---

(१) न हि प्रवचननिमित्तत्वं समाख्यानां संभवति । एकस्यापि कर्तृत्वे बहूनां प्रवक्तृत्वसंभवेन तस्य असाधारणत्वाऽभावेन अन्यव्यावर्तकत्वरूपविशेषणत्वाऽयोगादिति भावः । (२) अस्य आहुरित्यनेनान्वयः ।

प्राक् शब्दे नित्यत्वे सिद्धे वेदे ऽपि नित्यत्वं वाचा विरूपनित्य-येत्यप्युक्तम् ॥ २९ ॥

आख्या प्रवचनात् ॥ ३० ॥

आख्या काठकादिसमाख्या प्रवचनात्(१) अध्ययनेन कठेना-धीतं काठकमित्युपपन्ना ॥ ३० ॥

परं तु श्रुतिसामान्यम् ॥ ३१ ॥

यद्यपि बर्बरः प्रावाहणिरित्यस्ति परं तु श्रुतिः प्रावाहणयादि-शब्दः सामान्यमन्यार्थस्यापि वाचकम् । प्रेत्यस्य उत्कर्षाश्रयः वहन-शब्दस्य गतिः इकारस्य कर्ता तथा च उत्कृष्टगत्याश्रयः नापत्यार्थः प्रत्ययः तथा च वायुपरः स चानादिः बर्बर इति वायुशब्दानुक-रणमिति नानुपपत्तिगन्धो ऽपि ॥ ३१ ॥

कृते वा नियोगः स्यात्कर्मणः संबन्धात् ॥ ३२ ॥

ननु "जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्र-काणि । तं ब्राह्मणी पृच्छति पुत्रकामा राजसुमायां लशुनस्य को ऽर्घ" इतिवद्वेदे गावो वा एतत्सत्रमासतेत्यादीनामसंबद्धप्रला-पानां सत्वात् कथं वेदः प्रमाणमत्राह । कृतइति । कर्मणः कर्मप्रो-तिपादकवाक्यस्य संबन्धात् परस्परसाकाङ्क्षपदघटितत्वाद् गावो वा इत्यादीनामपि कृते कर्मणि स्तुतिद्वारा विनियोगः अयं भावः । यएवं विद्वांसःसंवत्सरमुपयन्त्यनार्तथा इति अनेन संवत्स-रसाध्यसत्रयागः कार्य इत्युक्ते केनेत्युक्ते होमेनेति कस्मै आर्तिना-शाय कथमिति ज्योतिष्टोमो वैश्वानरो ऽतिरात्र इत्यादिरीत्या सर्व संबद्धम् । तत्समीपे गावः सत्रमासतेति न स्वार्थतात्पर्यकं किं तु गवादयः जडा अपि कर्मानुष्ठानं चक्रुः किमुत विद्वांसः अनुष्ठेय-न्तित्यत्रासंशय इति स्तुतौ तात्पर्यं तस्मात्सर्व संबद्धमिति ॥ ३२ ॥

इति जैमिनिसूत्रवृत्तौ प्रथमस्य प्रथमः पादः ॥ १ ॥

---

(१) प्रवचनं हि प्रकर्षेणाऽध्ययनं तच्च कठे एवास्तीति न विशेषणत्वानु-पपत्तिरिति भावः ।

अर्थवादप्रामाण्यम् । अधि० १ ।

## आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥

विधेर्धर्मे प्रामाण्यं व्यवस्थापितम् । अथार्थवादानां धर्मे प्रामाण्यमस्ति न वेति संशये पूर्वपक्षमाह । आम्नायस्येति । आम्नायस्य वेदस्य क्रियार्थत्वात्प्रवृत्त्याद्यर्थत्वाद् अतदर्थानां प्रवर्त्तकविध्याद्यघटितानां सिद्धवस्तु कथनरूपाणां वायुर्वैक्षेपिष्ठेत्यादीनामानर्थक्यं प्रवृत्त्याद्यजनकत्वं (१) यतोऽतस्तस्माद् अनित्यं धर्मप्रमित्यजनक मुच्यते ॥ १ ॥

## शास्त्रदृष्टविरोधाच्च ॥ २ ॥

इतोऽपि न प्रमाणमित्याह । शास्त्रेति । शास्त्रेण विरोधो यथा स्तेनं मनोऽनृतवादिनी वागिति सिद्धार्थस्य केवलस्य प्रामाण्यस्य निष्फलतया मनः स्तेनं वाचमनृतां कुर्यादिति विधिः कल्प्यः तथा च नानृतं वदेदिति शास्त्रविरुद्धम् (२) । तथा दृष्टिः प्रत्यक्षप्रमाणं तद्विरुद्धं तस्माद् धूम एवाग्नेर्दिवा ददृशइति वाक्यस्यैवकारेण वह्निदर्शनं नेति प्रतिपादनं प्रत्यक्षविरुद्धम् ॥ २ ॥

## तथा फलाभावात् ॥ ३ ॥

दूषणान्तरमाह । तथेति । तथेति दूषणान्तरद्योतकं फलाभावात् । गर्गत्रिरात्रब्राह्मणे शोभतेऽस्य मुखं य एवं वेदेति श्रुतं कुमुखस्यैतज्ज्ञाने न मुखं न शोभते अतः फलाभावो दृष्ट इति भावः ॥ ३ ॥

## आनर्थक्यात् ॥ ४ ॥

पूर्णाहुतिमुत्तमां जुहोति सर्वमेवाप्नोतीति श्रवणात्पूर्णाहुत्यैव सर्वफललाभे तदतिरिक्तानां यावतां कर्मणां वैयर्थ्यमित्यभिप्रायेणाह । आनेति । आनर्थक्याद् वैयर्थ्यात् ॥ ४ ॥

---

(१) न च सोऽरोदीदित्यादौ यतः स रुद्रो रुरोद अतो रोदितव्यमन्येनापि यतः प्रजापतिर्वपामुदखिदेद अतोऽन्योऽप्युत्खिदेदात्मनो वपामित्याद्यध्याहारेणार्थकल्पनेन प्रवर्तकत्वं शक्यम् । रोदनस्येष्टवियोगादिनिमित्तकस्य वपोत्खेदस्य चाऽपुरुषार्थत्वात् । (२) चोर्दभिग्रहणाऽग्रहणवद्विकल्पस्तु नापादयितुं शक्यः । नानृतं वदेदिति निषेधस्य प्रत्यक्षत्वेन अस्य च विधेः कल्प्यत्वेन समानबलत्वाऽभावात् ।

## अभागिप्रतिषेधात् ॥ ५ ॥

लोके केन चिदप्राप्तस्य निषेधो दृश्यते अर्थवादे अत्यन्तमप्राप्ता र्थनिषेधो नान्तरिक्षे चिन्वीतेति अतः स्वार्थे अप्रमाणं सद्धर्मे कथं प्रमाणं भवेदित्याह । अभागीति । अभागिनः अत्यन्तमप्राप्तस्य ॥५॥

## अनित्यसंयोगात् ॥ ६ ॥

पूर्वं बबरः प्रावाहणिरिति जन्मवत्पुरुषसंयोगाद्वेदा अनित्या इति यो ऽयमाक्षेपः तमेवाक्षेपं प्रकृतपूर्वपक्षोपोद्बलकत्वेन अनुवदति । अनित्येति । पूर्वं व्याख्यातम् ॥ ६ ॥

## विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥

सिद्धान्तमाह । विधिनेति । विधीनां विधिविषयाणां वायव्यं श्वेतमालभेतेति विहितवायुदेवतादीनां स्तुत्यर्थेन स्तुतिसापेक्षेण विधिना वाक्यैकवाक्यत्वाद्(१) विधेयं स्तुवन्तः अर्थवादः धर्मे प्रमाणानि स्युः । अयं भावः । यथा ऽर्थभावनांशत्रयवती तथा शब्दभावनाया अप्यंशत्रयम् । साध्याकाङ्क्षायां पुरुषप्रवृत्तिः साध्यतयान्वेति करणाकाङ्क्षायां लिङादिश्रवणं लिङादिश्रवणेन केवलेन पुरुषप्रवृत्त्यसंभवात्सहकारितया स्तुतिमपेक्षते; तदर्पकतयार्थवादः विध्येकवाक्यतामापद्यन्त इति (२) ॥ ७ ॥

## तुल्यं च सांप्रदायिकम् ॥ ८ ॥

ननु अर्थवादवाक्यानि पूर्वोक्तयुक्त्या संपातायातानीत्यत्राह । तुल्यं चेति । साम्प्रदायिकं गुरुपरम्परासंप्रदायप्राप्तम् स्वाध्यायविधिपरिगृहीतत्वानध्यायपाठाभावादिरूपपालनादिकं तुल्यं विध्यर्थवादयोः तुल्यम् । अतः न संपातायातम् ॥ ८ ॥

---

(१)यतो वायुः क्षेपिष्ठा देवता अतो भूतिकामः श्वेतमालभेतेति यतो रजतं रोदननिमित्तमतो यागे न देयम् यतः प्रजापतिरात्मनो वपामस्य त्खिदधेमं यागमकरोदवश्यमेतादृशः प्रशस्तयागः कर्तव्य इति सर्वत्र विधिना निषेधेन वा सहैकवाक्यतालाभाद्विधेयस्तुत्यादिद्वारा प्रवर्तकत्वमुपपन्नमर्थवादवाक्यानाम् ।

(२) यत्र नार्थवादस्तत्रागत्या लिङैव प्राशस्त्यं बोध्यते इति बोध्यम् ।

अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थ-स्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥

शब्ददृष्टिविरोधादित्यत्र शास्त्रविरोधस्य परिहारमाह । अप्राप्तेति । पूर्वोक्तशास्त्रविरोधः नानृतं वदेदित्यादिना स विरोधःप्रयोगे अनृतवदनं कर्त्तव्यमिति तात्पर्ये सति स्यात् । विरोधे शब्दार्थः स्तुतिनिन्दादितात्पर्यकः । शब्दार्थः अनृता वागिति अप्रयोगभूतः अप्रयोजकः विरोधे अतो ऽस्मन्मते ऽनुपपत्तिः विरोधरूपा अप्राप्ता उपपद्यते च सर्वम् ॥ ९ ॥

गुणवादस्तु ॥ १० ॥

ननु विधिना त्वेति सूत्रे अर्थवादस्य विधेयस्तावकत्वमुक्तं तत्क्वचिन्नचरति यथा वेतसशाखया वकाभिश्च विकर्षतीति वेतसशाखावकयोर्विधिः अपां च स्तुतिः उदासीनायामिदं कथमत्राह । गुणेति । गुणस्य विधेयकारणगतगुणस्य वादः कथनं वेतसशाखावकयोः कारणमापः तद्वृत्तिगुणकथने कारणगुणाः कार्यगुणान् आरभन्तइति न्यायेन कार्ये ऽपि तद्गुणसत्वं ज्ञायतइति तस्यापि स्तुतिरिति भावः ॥ १० ॥

रूपात् प्रायात् ॥ ११ ॥

ननु अस्तेने मनसि स्तेनाभेदप्रतिपादनं तथा वाच्यनृतत्वप्रतिपादनं बाधितार्थं गौरश्व इतिवदत्राह । रूपादिति । रूपात्स्तेनवृत्तरूपाद् धर्मवत्वात् स्तेनेन चोरेण सहाभेदं प्रायात् प्राप । अयं भावः । चतुर्थपादे वक्ष्यमाणो यथा ऽऽदित्यो यूप इति आदित्यवृत्तिरूपवत्वेन अभेदं प्राप तथा (१) स्तेने यथा प्रच्छन्नसंचारस्तथा मानसि सत्वाद्भेदप्रयोग औपचारिक इति ॥ ११ ॥

दूरभूयस्त्वात् ॥ १२ ॥

दृष्टिविरोधं परिहरति । दूरेति । (२)दिवा दूरदेशस्थस्य धूम एव

---

(१) हिरण्य हस्ते भवति अथ गृह्णाति अस्य विधेः स्तेनं मनो ऽनृतवादिनी वागिति शेषः ।

(२) अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोतीति मिश्रलिङ्गमन्त्रयोर्विधानस्य तस्माद्धूम एवाग्नेर्दिवा ददृशे इत्ययं शेषः ।

दृश्यते न वह्निरिति न दृष्टेर्विरोधः । वह्नेर्दिवादर्शनमिति सूत्रे पूरणीयम् ॥ १२ ॥

स्वयपराधात् कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥

प्रवरानुमन्त्रणविधिमर्मोपे न चैवं विद्म ब्राह्मणा वयमब्राह्मणा वेति श्रुतम् । प्रत्यक्षेण निश्चिते ब्राह्मणत्वे संशयकथनं प्रत्यक्षविरुद्धमुक्तं परिहरति । स्त्र्यपराधादन्यजातीयपुरुषयोगेनापि कर्तुः पुत्रत्वमन्यजात्युत्पन्नपुत्रत्वं तस्य दर्शनं संभावनमस्ति अतः ब्राह्मणा अब्राह्मणा वेति विचिकित्सासंभवः । अयमर्थवादः आर्षेयं वृणीतइति विधिशेष(१)स्तावकः ॥ १३ ॥

आकालिकेप्सा ॥ १४ ॥

को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेति दिक्षवतीकाशान् करोतीति । ज्योतिष्टोमे प्राग्वंशशालायाः परिश्रयणं विहितं प्रथमम् । अमुष्मिन् लोके स्वर्गोऽस्ति न वा को वेद इदानीं धूमस्य मुखादिषु प्रवेशे सद्यो मरणं भविष्यतीति धूमनिर्गमार्थं चतुर्दिक्षु द्वाराणि करोतीति वाक्याभिप्रायः । तत्र ज्योतिष्टोमेन स्वर्गकाम इत्युक्त्वा स्वर्गोऽस्ति न वेति कथनं शास्त्रविरुद्धं कथमुक्तमित्याक्षेपे उत्तरमाह । आकालिकेति । आकालिकस्य तत्कालोद्भवस्य सुखस्य दुःखनिवृत्तेर्वेप्साइच्छा सर्वानुभवसिद्धा । तां गृहीत्वा कालान्तरभाविस्वर्गनिन्दया द्वारकरणप्राबल्यकमिति स्तौति चेदं वाक्यम् ॥१४॥

विद्याप्रशंसा ॥ १५ ॥

शोभतेऽस्य मुखं य एवं वेदेति गर्गत्रिरात्रविधिस्तावकमित्याह । विद्येति । गर्गत्रिरात्रवेदनस्येदं फलं किमुत तदनुष्ठानइति । विद्याया वेदनस्य प्रशंसा तद्द्वारा क्रतुस्तुतिः ॥ १५ ॥

सर्वत्वमाधिकारिकम् ॥ १६ ॥

पूर्णाहुत्या सर्वान् कामा इति शेषवैयर्थ्यमित्यस्योत्तरं सर्वत्वमिति । श्रूयमाणं सर्वत्वमाधिकारिकम् औपचारिकम् । यथा सर्वमन्नं शुद्धमि-

(१) न चैतद्विद्म इत्यादिः प्रवरे प्रव्रियमाणे देवाः पितर इति ब्रूयादित्यस्य शेषः ।

त्यत्र सर्वपदं गेहस्थान्ननमात्रपरं तथा सर्वपदं प्रकृतक्रतुसाध्यफलपरं, यच्च क्रतुसाध्यं फलं तत्पूर्णाहुत्यनुष्ठानेन विना न भवतीति पूर्णाहुति(१)विधिस्तावक इति भावः ॥ १६ ॥

**फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥ १७ ॥**

इदं समाधानं शेषवैयर्थ्यपरिहारक्षमं न भवतीति समाधानान्तरमाह । फलस्येति । फलस्य स्वर्गादेः कर्मतः क्रियया निष्पत्तेः तेषां कर्मणां परिमाणतः फले विशेषो लघुगुरुभावः स्याद् लोकवत् । लोके ऽल्पक्रियया ऽल्पभृतिः गुरुत्वे कर्मणः भृत्याधिक्यम् तथा पूर्णाहुत्या अल्पकालभोग्यः स्वर्गः ज्योतिष्टोमेन चिरभोग्य इति न शेषवैयर्थ्यमिति भावः ॥ १७ ॥

**अन्त्ययोर्यथोक्तम् ॥ १८ ॥**

अन्त्ययोः अभागिप्रतिषेधादिति अनित्यसंयोगादिति सूत्रयोः समाधानम् यथोक्तं पूर्वोक्तं ज्ञेयम् । स्वार्थे अप्रामाण्ये ऽपि रुक्ममुपदधातीति विधेयस्तावकतया प्राणाहर्षिरित्यस्य वायुपरत्वं चोक्तमिति भावः ॥ १८ ॥

विधिवन्निगदाः । अधि० २

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥**

औदुम्बरो यूपो भवतीति । अत्रौदुम्बरत्वमूर्क्पशुरूपफलमुद्दिश्य विधीयतउतातिदेशप्राप्तयूपमुद्दिश्य विधीयतइति संशये पूर्वपक्षमाह । विधिरिति । वाशब्द एवार्थे । फलमूर्जं पशूनाप्नोतीत्यंशप्रतिपादितमुद्दिश्य उदुम्बरत्वस्य विधिरेव स्याद् अपूर्वत्वाद् गुणफलयोर्जन्यजनकभावस्याप्राप्तत्वात् । नन्वर्थवादो ऽस्त्वत आह वादेति । वादमात्रमर्थवादमात्रं चेत् स्वार्थाप्रतिपादकतया अनर्थकं व्यर्थम् । यत्र सर्वथा(२) ऽगतिः तत्र लक्षणया स्तावकत्वं प्रकृते तथा नेति (३)भावः ॥ १९ ॥

---

(१) पूर्णाहुतिं जुहोतीत्यस्येत्यर्थः । (२) लक्षणाया जघन्यवृत्तित्वादिति भावः । (३) यद्यप्यत्र विधिप्रत्ययो नास्ति तथापि ऊर्जं पशूनाप्नोत्यूर्जो ऽवरुध्यै इत्यनेनपशूनां साध्यत्वं गम्यते श्रुत्या । साध्यस्य च साधनापेक्षत्वात्तत्सन्निधौ उच्चरितमौदुम्बरत्वं साधनत्वेनावगम्यते । फलसाध-

लोकवदिति चेत् ॥ २० ॥

सिद्धान्ती शङ्कते। लोकेति । लोके गोविक्रयवेलायामियं गौस्संपन्नक्षीरा स्त्र्यपत्येति स्तुतिवाचकशब्दमपेक्षते त्वया क्रीतव्येति वाक्यं तथौदुम्बरो यूपो भवतीति स्तुतिमपेक्षते अतो ऽर्थवादो न फलप्रतिपादकः ॥ २० ॥

न पूर्वत्वात् ॥ २१ ॥

दूषयति । नेति । पूर्वत्वात् प्रत्यक्षादिगम्यत्वाद् विधिरप्रयोजक इति स्तुतौ पर्यवस्यति इह तूर्क्पशुत्वादिसाधनत्वं न तथा ऽतः शक्त्या फलजनकत्वबोधसंभवे लक्षणया स्तुतिकल्पनं न युक्तमिति भावः ॥ २१ ॥

उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥

सिद्धान्तमाहोक्तमिति । विधिना त्वेकवाक्यत्वादिति सूत्रे वाक्यशेषत्वं विधिशेषत्व स्तुतिद्वारा विध्येकवाक्यत्वमुक्तं तथा च न निरर्थत्व (१) मिति भावः ॥ २२ ॥

विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥

ननु शक्त्या विधिसंभवे लक्षणया स्तुतिकल्पनमन्याय्यमत आह । विधिरिति । क्वचिद्वाक्यविशेषे विधि विध्यर्थप्रवर्त्तनारूपः अनर्थकः संभवति यथा वायुर्वै क्षेपिष्ठा देवतेति वाक्ये वायौ क्षिप्रगामित्वविषयप्रवर्त्तनार्थः । वायुः क्षिप्रगामी कर्तव्य इति योज्यं तन्न संभवति वायोः क्षिप्रगामित्वस्य स्वभावसिद्धत्वेन पुरुषकृत्यसाध्यत्वाद् अतः आह । आनर्थक्यमिति । आनर्थक्यं विधावानर्थक्यं स्यात् स्तुतिः वायव्यं श्वेतमालभेत भूतिकाम इति विहितयागाङ्गभूतवायुदेवतास्तुतिः तत्समीपवृत्तित्वेन तस्माद्वाक्यात् प्रतीयेत

---

तत्वज्ञानमात्रेण च प्रवृत्तिसिद्धेर्न विधिप्रत्ययादृते काचिदनुपपत्तिः अर्थवादत्वे तु वैयर्थ्यमिति भावः । (१) अविहितस्य फलसंबन्धाऽसंभवाद् विधेश्चाश्रवणात्कल्प्यत्वे स्तुतिं विना तदसंभवात् स्तावकत्वबोधकत्वयोरुभयोराश्रयेणे वाक्यभेदप्रसङ्गादगत्या लक्षणया अन्यत्रैव स्तावकमिति भावः।

मन्त्राणामर्थप्रत्यायनार्थत्वम् । अधि० ४ ।

## तदर्थशास्त्रात् ॥ ३१ ॥

मन्त्रोच्चारणमदृष्टार्थमुत कर्मसमवेतार्थस्मारकतया तदुपयोग इति संशये पूर्वपक्षमाह । तदिति । देवस्य त्वेत्यारभ्य गायत्रेण छन्दसा ऽऽददे त्रैष्टुभेन जागतेन त्वा छन्दसा ऽऽददे पाङ्क्तेन छन्दसा ऽऽददइति मन्त्राः सन्ति । तत्र लिङ्गेनैव आदानसिद्धौ चतुर्भिरभ्रिमादत्तइति आदानार्थकशास्त्रान्तरश्रवणं तथा इमाम-गृभ्णन् रशनामित्यत्र लिङ्गेनैव आदानसिद्धौ इमामगृभ्णन् रशना-मृतस्येत्यश्वाभिधानीमादत्तइति श्रवणं(१)ऽपार्थम् उरु प्रथस्वेत्यत्र तदर्थः सः पुरोडाशप्रथनरूपो ऽर्थः यादृशि शास्त्रे तादृशशास्त्रात् उरु प्रथस्वेति पुरोडाशं प्रथयतीति विधिवाक्यात् तज्ज्ञानसंभवात् । मन्त्रानर्थक्यमित्यत्र (२)सर्वपक्षव्यन्तानामन्वयः ॥ ३१ ॥

## वाक्यनियमात् ॥ ३२ ॥

हेत्वन्तरमाह । वाक्येति । वाक्यस्य वाक्यक्रमस्य नियमात् । अग्निर्मूर्धा दिवः ककुदित्यत्र मूर्धा दिव इति व्युत्क्रमपाठे ऽपि अर्थप्रतिपत्तिसंभवात् क्रमनियमो ऽपार्थः स्यादिति भावः ॥ ३२ ॥

## बुद्धशास्त्रात् ॥ ३३ ॥

हेत्वन्तरमाह । बुद्धेति । अग्नीध्रेण प्रयोगाद् बहिरेव अग्नि-विहरणादिकर्म मदीयमिति बुद्धे ज्ञाते अग्नीदग्नीन्विहर बर्हि-स्तृणीहीति शास्त्रात पाठाद् ज्ञातस्य ज्ञानं निष्प्रयोजन-मिति भावः ॥ ३३ ॥

## अविद्यमानवचनात् ॥ ३४ ॥

इतो ऽपि मन्त्रानर्थक्यमाह । अविद्येति । अविद्यमानव-स्तुनः वचनात् कथनाद् । चत्वारि शृङ्गा त्रयो अस्य पादा इति प्रतिपादितं वस्तु प्रकृतौ विकृतौ वा नास्तीति भावः ॥ ३४ ॥

---

(१) अदृष्टार्थत्वे तु प्रकरणाद्यत्र क्व चन तदुच्चारणं प्रसज्येतेति कर्म-विशेषे विनियोगार्थं चतुर्भिरभ्रिमादत्ते इमामगृभ्णन् रशनामृतस्येत्यश्वा-भिधानीमादत्तइत्यादीनां सार्थक्यमिति भावः । (२) अनित्यसंयोगा-न्मन्त्रानर्थक्यमित्येकोनचत्वारिंशत्तमसूत्रस्थइति शेषः ।

अचेतनार्थसंबन्धात् ॥ ३५ ॥

शृणोत ग्रावाणः स्वधिते मैनं हिंसीरित्यचेतनसंबोधनादप्याह । अचेतनेति अचेतनार्थे स्वधित्यादौ संबोधन(१)विभक्तिप्रयोगात् ॥ ३५ ॥

अर्थविप्रतिषेधात् ॥ ३६ ॥

हेत्वन्तरमाह । अर्थेति । अर्थयोः मन्त्रघटकपदार्थयोः विप्रतिषेधाद् विरोधात् । अदितिर्द्यौरदितिरन्तरिक्षमित्यत्रादितिः चेतना तस्या अचेतनेन अन्तरिक्षादिना साकं संबन्धो विरुध्यत इति भावः ॥ ३६ ॥

स्वाध्यायवदवचनात् ॥ ३७ ॥

यथा स्वाध्यायोऽध्येतव्य इति अक्षरग्रहणविधिः तथा अवचनादर्थस्मरणं मन्त्रेण कर्त्तव्यमिति विध्यभावात ॥ ३७ ॥

अविज्ञेयात् ॥ ३८ ॥

अन्यं हेतुमाह । अविज्ञेति । सृण्येव जर्भरी तुर्फरीत्यादिमन्त्राणामविज्ञेयार्थकपदघटितत्वादिति भाव ॥ ३८ ॥

अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३९ ॥

अन्यमाह । अनित्येति किं ते कृण्वन्ति कीकटेषु गाव इत्यत्र कीकटदेशादिरूपानित्यवस्तुवचनपदघटितत्वात् । अर्थविवक्षायामनित्यत्वं वेदस्य स्यादतो मन्त्रानर्थक्यं दृष्टस्यार्थस्मरणस्य कारणं न किं तु तदुच्चारणमदृष्टार्थमिति भावः ॥ ३९ ॥

अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥

सिद्धान्तमारमते । अवीति । लोके यानि पदानि ये च तेषामर्थाः तेभ्यः अविशिष्टः अविलक्षणः वेदे पदप्रहितो ऽर्थः । यथा लोके उच्चारितशब्दार्थो विवक्षितः तथा वेदे(२) ऽपीति भावः ॥ ४० ॥

---

(१) ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीः शृणोत ग्रावाण इत्यादाविति शेषः । संबोधनं नामाऽभिमुखीकरणं न च तत्संभवति अचेतने इति भावः । (२) अप्रकाशिते यज्ञे यज्ञाङ्गे च यागस्याभिनिर्वर्त्तयितुमशक्यतया संभवति दृष्टफलकत्वे ऽदृष्टफलकल्पनाया अन्याय्यत्वाच्च अर्थस्मरणार्थत्वं मन्त्राणामवश्यं वक्तव्यमिति भावः ।

गुणार्थेन पुनः श्रुतिः ॥ ४१ ॥

चतुर्भिरभ्रिमादत्त इत्यस्य फलमाह । गुणेति । गुणार्थेन चतु-ष्ट्वरूपगुणलाभार्थं पुनः श्रुतिः पुनर्विधानम् । आदाने लिङ्गेनैकैक-मन्त्रस्य विकल्पेन प्राप्तौ चतुर्णां समुच्चयार्थं पुनर्विधिरिति भावः॥४१॥

परिसंख्या ॥ ४२ ॥

अश्वाभिधानीमादत्त इत्यस्य फलमाह । परीति । परिसंख्यायाः गर्दभरशनातो निवृत्तिः फलम् । लिङ्गस्योभयसाधारणत्वादिति भावः ॥ ४२ ॥

अर्थवादो वा ॥ ४३ ॥

उरु प्रथस्वेति ब्राह्मणवाक्यं लिङ्गेन कल्पितविधिशेषो ऽर्थवाद इत्याह । अर्थेति ॥ ४३ ॥

अविरुद्धं परम् ॥ ४४ ॥

वाक्यनियमादित्यस्योत्तरमाह । अविरुद्धमिति । परं नियमकमकं पठनमविरुद्धमर्थस्मरणपक्षे ऽप्यविरुद्धं क्रमपाठनियमापूर्व-कल्पनादिति शेषः ॥ ४४ ॥

संप्रैषे कर्मगर्हाऽनुपालम्भः संस्कारत्वात् ॥ ४५ ॥

बुद्धशास्त्रादित्यस्योत्तरमाह । संप्रैषइति । सम्प्रैषे ऽग्नीदग्नी-निति वाक्ये कर्मणि कर्त्रबोधे गर्हा दूषणं तदनुपालम्भः अदूषणम् । संस्कारत्वात् । मन्त्रेण पुनः स्मरणेन आग्नीध्रस्य संस्कारो भवति व्रीहीणामिव प्रोक्षणेनेति भावः ॥ ४५ ॥

अभिधाने ऽर्थवादः ॥ ४६ ॥

अविद्यमानवचनादित्यस्योत्तरमाह । अभिधानेति । अभिधाने चत्वारीति मन्त्रे चत्वारि शृङ्गा इत्यादीनि पदानि अर्थवादः गौण्या वृत्त्या स्तावकानि । अयमृग्वेदे विषुवसंज्ञकएकाहे आग्नेय्या होता शंसतीति विहितआज्यशस्त्रे अग्निस्सूर्यादिभिन्न इति स्तुत्यर्थं प्रवृत्तः । अस्य सूर्यस्य चत्वारि शृङ्गा दिवससंधिन्धयः ः त्रयः शीतोष्णवर्षाः पादाः द्वे अयने शीर्षे सप्त अश्वाः

हस्ताः त्रिधा त्रिप्रकारेण सवनत्रयरूपेण बद्धः वृष्टिहेतुत्वाद् वृषभः महोदेवः मर्त्यानुत्साहयन् आविवेशेति सूर्याभिन्नो ऽग्निरित्यर्थ. । एतेनाचेतने स्वधित्यादौ चैतन्यारोपेण तत्स्तुतिरिति अचेतनेति सूत्रमपि प्रत्युक्तम् ॥ ४६ ॥

गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥

अर्थविप्रतिषेधादित्यस्योत्तरमाह । गुणादिति । गुणाद् गुणकथनात् । अविप्रतिषेधः अविरोधः । अदितिर्द्यौरित्यत्र त्व माता त्वं पितेतिवद्विद्यमानगुणैरेव स्तुतिरिति भावः ॥ ४७ ॥

विद्यावचनमसंयोगात् ॥ ४८ ॥

स्वाध्यायेति हेतुं निवारयति । विद्यति । विद्याया अर्थज्ञानस्यावचनमविधानम् । असंयोगादर्थसिद्धत्वात् स्वाध्यायविधिना-ध्ययनमर्थज्ञानमिति सिद्धत्वादिति भावः ॥ ४८ ॥

सतः परमविज्ञानम् ॥ ४९ ॥

सृण्येव जर्भरीत्यादौ सतः अर्थस्य सतः अविज्ञानं ज्ञानाभावः आलस्यादिति पूरणीयम् । तस्या ऋचो ऽर्थकौत्स्तु स्पष्टः ॥ ४९ ॥

उक्तश्चानित्यसंयोगः ॥ ५० ॥

अनित्यसंयोगपरिहारस्तूक्तः प्रथमपाद इत्याह । उक्त इति । अनित्यसंयोगः तद्वारणोपायः ॥ ५० ॥

लिङ्गोपदेशश्च तदर्थत्वात् ॥ ५१ ॥

एवं परोक्तदोषानुद्धृत्यार्थविवक्षायां साधकमाह । लिङ्गेति आग्नेय्या ऽऽग्नीध्रमुपतिष्ठत इत्यत्र विधौ आग्नेय्येति मन्त्रे ऽग्निलिङ्गोपदेशः अर्थज्ञानमन्तरा न संभवति । तदर्थत्वाद् अग्निः देवता प्रतिपाद्या अस्यामृचीत्याग्नेयीति तद्धितार्थत्वात् । अस्यामृच्यग्निर्देवता प्रतिपाद्येत्यर्थज्ञानमन्तरा ऽसंभवादिति भावः ॥५१॥

ऊहः ॥ ५२ ॥

साधकान्तरमाह । ऊहः ऊहविधेः उपपन्न इति शेषः । अयं भावः । बहुपशुकयागे अर्थबाधेन एनमित्यत्र एनानिति बहुवचनोहवत् माता मन्यतामनुपितेत्यत्र मातरो मन्यन्तामनुपितर

इत्यूह····· न माता वर्धते नो पितेति माता बहुवचनादूहेन न (१) वर्धयितव्य इति निषेधः अर्थज्ञानार्थत्व उपपद्यते । केवलम दृष्टार्थत्वे ऊहस्या प्रसक्तया निषेधो विरुध्यत इति ॥ ५२ ॥

विधिशब्दाश्च ॥ ५३ ॥

साधकान्तरमाह । विधीति । विधिश्च क्वचिदर्थवादश्च मन्त्रस्यार्थवत्त्वसाधकः । यथा ऽग्निहोत्रप्रकरणे महोपस्थाने अग्ने गृहपते सुगृहपतिरहं त्वयेति मन्त्रे शतँ हिमा इत्यस्ति । तत्र हिमा इत्यस्य व्याख्यानं शतँ हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वा वैतदाहेति । शतं हिमाः शतं हेमन्तानिति एतद्यजुराहेति व्याख्यानवाक्यार्थः । यदि यजुषो ऽर्थज्ञानपर्यन्तं तात्पर्यं न स्यात् तर्हि एतद्यजुरिममर्थमाहेति यजुरर्थप्रकाशनं व्यर्थमिति भावः ॥ ५३ ॥

इति जैमिनिसूत्रवृत्त्यां प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

स्मृतिप्रामाण्यम् । अधि० १ ।

धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् ॥ १ ॥

उक्तदिशा विध्यर्थवादमन्त्राणां धर्मे प्रामाण्यं व्यवस्थाप्येदानीं (२) स्मृतिशिष्टाचाराणां धर्मे प्रामाण्यं व्यवस्थापयन् पूर्वपक्षमाह । धर्मस्येति । धर्मस्य उक्तलक्षणलक्षितस्य शब्दः वेदः मूलं यस्य तत्त्वात् ।

---

(१) शब्दवृद्धिर्नाम द्विवचनबहुवचनसंयोगः ।

(२) यद्यपि चोदनाप्रामाण्यमप्रामाण्ये ऽपि स्मृतीनां न विहन्यते तथा ऽपि किंलक्षणो धर्म इति जिज्ञासाधिकारात् स्मृतिप्रामाण्यं लक्षणे सङ्गतम् । केचित्तु स्मृतीनामप्रामाण्ये याज्ञिकाः प्रतिनन्दन्तीति मन्त्रस्य स्मार्तरात्रिदेवताककर्माङ्गत्वेन तत्सापेक्षत्व तदप्रामाण्येन अप्रामाण्यात्तत्सामान्येन सकलस्य वेदस्याप्रामाण्यं प्रसज्येतेति वेदप्रामाण्यसिद्ध्यर्थं स्मृतिप्रामाण्यमिति सङ्गतिमाहुः । तन्न समञ्जसम् । स्मृत्यप्रामाण्ये मन्त्रस्य स्मार्तकर्माङ्गत्वे प्रमाणाऽभावात् । लिङ्गस्यापि तु विनियोजकत्व फलवदङ्गत्वेनाफलस्य विनियोगात् स्मृत्यप्रामाण्ये च स्मार्तकर्मणः फलवत्त्वाऽभावान्न वक्तुं शक्यम् । किं च मन्त्राऽप्रामाण्ये ऽपि न सर्वस्य वेदस्याऽप्रामाण्यमापादयितुं शक्यम् । सापेक्षत्वलक्षणहेतोस्तत्राऽभावेन अप्रामाण्यलक्षणसाध्यसिद्धेरयोगात् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिं प्रति पक्षतावच्छेदकावच्छेदेन हेतुनिश्चयस्य कारणत्वात् । तस्मादुक्तरीत्यैव सङ्गतिरिति ।

अष्टकाः कर्तव्या इति केवलपौरुषवाक्यप्रतिपाद्यमशब्दमवेदमूलमन-पेक्ष्यमनादरणीयं स्यात् ॥ १ ॥

## अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥

सिद्धान्तमाह । अपि वेति । दृढवैदिकप्रणयनान्यथानुपपत्तिरूपमनुमानं स्मृतिमूलभूतश्रुतिसत्त्वे स्यात् । तदित्थं स्मृतिः स्वमूलभूतवेददर्शनवत्प्रणीता वेदातिरिक्तगम्यो धर्मो न भवतीतिनिश्चयवता परेषां धर्मज्ञानार्थं प्रणीतत्वात् कल्पसूत्रादिवत् । नन्विदं प्रतारकवाक्यमित्येव किं नोच्यत इत्यत आह । कर्तृसामान्याद् वैदिकानुष्ठानस्मृत्योरेककर्तृकत्वात् । न हि वैदिकं कर्म धर्मबुद्ध्या अनुतिष्ठन् प्रतारको भवेदिति भावः ॥ २ ॥

श्रुतिप्राबल्यम् । अधि० २ ।

## विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ॥ ३ ॥

औदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुतिविरुद्धा औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिः पक्षे श्रुतिबाधिका संकोचिका वा सती धर्मे प्रमाणं स्मृतित्वादिति बहिः पूर्वपक्षे सिद्धान्तमाह । विरोधइति । विरोधे उपलभ्यमानश्रुतिविरोधे अनपेक्ष्यं स्मृतिप्रामाण्यमनादरणीयं कल्प्यश्रुत्यपेक्षया प्रत्यक्षश्रुतेः प्रबलत्वेन बाधाद्यसंभवादिति भावः । विरोधे ऽसति श्रुतिकल्पकमनुमानं प्रवर्तते ॥ ३ ॥

दृष्टमूलकस्मृत्यप्रामाण्यम् । अधि० ३ ।

## हेतुदर्शनाच्च ॥ ४ ॥

ननु सर्वा वेष्टयितव्येतिस्मृतिप्रणयने किं कारणमत्राह । हेत्विति । प्रणयने विस्तीर्णवस्त्रलाभो भवतीति लोभस्य स्मृतिप्रणयने कारणत्वदर्शनात् । एतेन वैसर्जनीयं वासो ऽध्वर्युर्गृह्णातीति श्रुतिविरुद्धस्मृतेरपि मूलं लोभ एवेति सूचितम् ॥ ४ ॥

पदार्थप्राबल्यम् । अधि ४ ।

## शिष्टाकोपे ऽविरुद्धमिति चेत् ॥ ५ ॥

वेदं कृत्वा वेदिं करोतीति श्रुत्या वेदवेद्योः पूर्वापरभावः प्रतिपाद्यते । तयोर्मध्ये क्षुतआचामेदिति क्षुत्निमित्तमाचमनं स्मृत्या प्राप्तम् । एवं श्रौतक्रमेण प्राप्ते स्मार्त्ताचमनस्य विरोधे आचमनं बाध्यते न वेति संशये सिद्धान्तेनोपक्रमते । शिष्टेति । शिष्टानां

वैदिकानां पदार्थानामकोपे अविरोधे आचमनमविरुद्धमनुष्ठेयम् । क्रमस्य पदार्थधर्मत्वेन आचमनेन प्रकृतेन पदार्थेन बाधे बाधकाभाव इति भावः ॥ ५ ॥

न शास्त्रपरिमाणत्वात् ॥ ६ ॥

पूर्वपक्षमाह नेति । शास्त्रावगत प्रयोगविधयवगतं परिमाणं संख्याविशेषो यत्र तत्त्वत्पूर्वोक्तं न । प्रयोगविधिना अस्मिन्कर्मणि इयन्तः पदार्था इति संख्याविशेषो ग्राहितः तद्विरोधादाचमनस्मृतिबाध इति भावः ॥ ६ ॥

अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥

सिद्धान्तं द्रढयति । अपि वेति । कारणानां स्मृतिप्रणयनकारणानां लोभादीनामग्रहणे अदर्शने सति प्रयुक्तानि अनुष्ठितान्याचमनादीनि अविरुद्धानि प्रतीयेरन् । न हि स्वगुणरूपसङ्ख्यानुसारेण (१) प्रधानपदार्थबाधो युक्त इति भावः ॥ ७ ॥

(१) प्रमेयावगमस्य प्रमाणपूर्वकत्वात्पूर्वभाविप्रमाणस्य बलाबलं पूर्वं गृह्यते तेनाचमनादिस्थः क्रमादीनां बलवत्त्वे निर्णीते पश्चादत्रगतं प्रमेयबलाबलं नादरणीयमिति तु शङ्क्यम् । प्रमेयगतविरोधालोचनयैव प्रमाणविरोधबुद्धेरुदयन प्रमेयविरोधावगमकाले एव तयोर्बलाबलत्वाऽप्यवगमात्तत एवं निर्णये प्रमाणबलाबलस्यैव नैराकाङ्क्ष्येणाऽनादरणीयत्वात् ।

अत्र वार्तिककारोऽन्यथा अधिकरणमारचयति स्म । भाष्योक्तपूर्वपक्षस्यातिमन्दत्वात् । शाक्योक्ताऽहिंसादिवचनं प्रमाणमप्रमाणं वेति संशये शिष्टाकोपेऽविरुद्धमिति चेदिति पूर्वपक्षसूत्रम् । अस्यार्थः । शिष्टस्य श्रुतिस्मृतिविहितस्य अकोपे व्याकोपाऽभावे अविरुद्धं तत्प्रमाणं भवतीति । सिद्धान्तयति । न शास्त्रपरिमाणत्वादिति । "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" । इत्यादिभिरेव धर्मप्रमाणा नियतत्वात् श्वदृतिधृतगोक्षीरस्य शुचित्वाऽभाव इव शाक्योक्ताऽहिंसादेः फलसाधनत्वाऽभावेन धर्मत्वाऽभावात्तद्वचनस्याऽप्रामाण्यमिति । अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेन् । इति सूत्रं तु सदाचारप्रामाण्यबोधनार्थमधिकरणान्तरत्वेन व्याख्यातवान् । सदाचारोऽप्रमाणं प्रमाणं वेति संशये मूलभूतवेदाऽभावादप्रमाणमिति वहिः पूर्वपक्षे प्रयुक्तानि वैदिकैर्धर्मबुद्ध्यैरनुष्ठितानि कारणस्य रागद्वेषादिनिमित्तकस्य धर्मव्यतिक्रमसाहसस्याग्रहणे श्रुतिस्मृतिविरोधादर्शनाच्च प्रतीयेरन प्रमाणतया गृह्येरन । मन्वादिभिरपि श्रुतिः स्मृतिः सदाचार इति संक्षेपेण सदाचारस्य प्रामाण्यं प्रतिपादितम् । तस्मात्प्रमाणमिति सिद्धान्तः ।

शास्त्रप्रसिद्धपदार्थप्रामाण्यम् । अधि० ५ ।

**तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ ॥**

यवमयश्चरुर्भवतीत्यत्र आर्ययवनव्यवहारद्वैविध्येन यवपदार्थसंशये पूर्वपक्षमाह । तेष्विति । तेषु व्यवहारेषु विरोधस्य प्रबलदुर्बलभावस्यादर्शनाद् विप्रतिपत्तिः शक्तिग्रहः समा तुल्यः स्यात ॥ ८ ॥

**शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥**

सिद्धान्तमाह । शास्त्रस्थेति । शास्त्रस्था शास्त्रप्रतिपाद्या प्रतिपत्तिः यवशब्दस्य "वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः" इति शास्त्रप्रतिपत्तिर्बलीयसी । कुतः तन्निमित्तत्वात् । तस्य धर्मज्ञानस्य निमित्तं शास्त्रं तस्वात् । यवमयश्चरुर्भवतीति धर्मसाधनयवशक्तिज्ञानं शास्त्रजमेव धर्मउपयुज्यते । यवनानां व्यवहारस्य भ्रान्तिमत्त्वेनापि संभवादिति भावः । ॥ ९ ॥

म्लेच्छप्रसिद्धपदार्थप्रामाण्यम् । अधि० ६ ।

**चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥ १० ॥**

पिकतामरसादिशब्दप्रयोगः आर्याणां न कुत्रापि म्लेच्छास्त्वर्थविशेषे व्यवहरन्ति । तत्र म्लेच्छव्यवहारं परित्यज्य व्याकरणेन प्रकृतिप्रत्ययौ परिशोध्यार्थकल्पनमुचितं म्लेच्छव्यवहारक्रम एव वेति संशये म्लेच्छव्यवहारस्य धर्मसाधनत्वाभावाद् व्याकरणादिना कल्प्यो ऽर्थ इति प्राप्ते पूर्वपक्षे सिद्धान्तमाह । चोदितमिति । चोदितं यवनैर्व्यवहृतं प्रतीयेत तत्पदार्थत्वेन ज्ञातव्यम् । बलवता प्रमाणेन अविरोधात् । यथा ऽर्थवादविरुद्धो यवव्यवहार. तथा ऽत्राभावादिति भावः ॥ १० ॥

कल्पसूत्राणां स्वतः प्रामाण्याऽभावः । अधि० ७ ।

**प्रयोगशास्त्रमिति चेत् ॥ ११ ॥**

बौधायनापस्तम्बादिसूत्राणि पौरुषेयाणि न वेति संशये पूर्वपक्षमाह । प्रेति । प्रयोगशास्त्रं कल्पसूत्रम् अपौरुषेयमनादीति चेत् ॥११॥

**नासन्नियमात् ॥ १२ ॥**

सिद्धान्तमाह । नेति । न अपौरुषेयाः असतः पूर्वमसतः बौ

अनाचार्यादिभिः नियमाद् निर्माणात् । तत्र कर्तुः स्पष्टमुपलभ्यमानत्वादिति भावः ॥ १२ ॥

**अवाक्यशेषाच्च ॥ १३ ॥**

अवाक्यशेषात् । प्रयोगविधिसन्निधौ तच्छेषार्थवादपाठाभावाच्च न वेदतुल्यः ॥ १३ ॥

**सर्वत्र प्रयोगात्सन्निधानशास्त्राच्च ॥ १४ ॥**

सर्वत्र सर्वकल्पसूत्रेषु सन्निधानशास्त्रात् सन्निधिपठितशास्त्रार्थात् । विरुद्धस्येति शेषः । विरुद्धार्थकस्य प्रयोगात् । यथाऽऽपस्तम्बसूत्रे सर्वाणि हवींषि पर्यग्नि करोतीति पुरोडाशं पर्यग्नि करोतीति प्रत्यक्षश्रुतिविरुद्धम् एवमन्यसूत्रेष्वपि द्रष्टव्यानि । अयं भावः । कल्पसूत्राणां वेदमूलत्वमुभयवादिसिद्धं तस्य नित्यत्वे श्रुत्यर्थानुवादकत्वात्प्रत्यक्षश्रुतिविरुद्धं वाक्यं न स्यात् । अनित्यत्वे न्यायाभासज्ञानेन वाक्यरचनं संभवतीति ॥ १४ ॥

सामान्यश्रुतिकल्पनम् । अधि० ८ ।

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १५ ॥**

होलाकाद्याचारः प्राच्यैरेव क्रियते । तन्मूलभूता कल्प्यमाना श्रुतिः होलाकाद्याचारः प्राच्यैः कर्तव्य इति कल्प्यते उत सा प्राच्याद्यघटितेति संशये पूर्वपक्षमाह । अनुमानेति । अनुमानस्य अनुमितिकारणीभूतलिङ्गस्याचारस्य व्यवस्थापनात्प्राग्देशे (१) एव नियतत्वात् प्रमाणमनुमिता श्रुतिः तत्संयुक्तं प्राच्यादिपदघटितं स्यात् ॥ १५ ॥

**अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य ॥ १६ ॥**

सिद्धान्तमाह । अपि वेति होलाकादिः सर्वेषां धर्मः स्यात् । विधानस्याचारानुमितश्रुतेस्तन्न्यायत्वात् । सः प्राच्यःद्यघटितवाक्यस्य कोऽन्याय. नर्कः तत्त्वात् । प्राच्यत्वादेरनुगतस्य निर्वक्तुमशक्यत्वेन प्राच्यादिघटितवाक्यकल्पकोऽत्र हेतुर्नास्तीति भावः ॥१६॥

---

(१) हेतुसाध्ययोः सामानाधिकरण्यनियमः यत्र हेतुस्तत्रैव साध्यसद्भाविरिति भावः ।

दर्शनाद्विनियोगः स्यात् ॥ १७ ॥

ननु शिखाकर्मवद्व्यवस्था किं न स्यादत्राह । दर्शनादिति । शिखायां मुण्डा भृगव इति गोत्रोपपदर्शनाच् श्रवणाद्विनियोगःव्यवस्था इह तथा नेति भावः ॥ १७ ॥

लिङ्गाभावाच्च नित्यस्य ॥ १८ ॥

इतो ऽपि नेत्याह । लिङ्गेति । नित्यस्य कर्तृविशेषनियमकर्तुः लिङ्गस्याभावात् ॥ १८ ॥

आख्या हि देशसंयोगात् ॥ १९ ॥

ननु प्राच्यत्वजातिं स्वीकृत्य तद्घटितश्रुतिकल्पनं संभवतीत्यत्राह । आख्येति । प्राच्यत्वं न जातिः किं तु प्राचीदेशसंयोगाद्व्यवहारः ॥ १९ ॥

न स्याद्देशान्तरेष्विति चेत् ॥ २० ॥

ननु यः प्राच्य इति समाख्यावान् सो ऽन्यस्यां दिशि गतः तदा प्राच्य इति व्यवहारो न स्यात् । प्राग्देशसंयोगस्य व्यवहारनिमित्तस्याभावादिति शङ्कते । न स्यादिति ॥ २० ॥

स्याद्योगाख्या हि माथुरवत् ॥ २१ ॥

मथुरायां भवो माथुर इति योगवदत्रापि प्राच्यां भव इति योगः न देशसंयोगप्रयुक्त इति समाधत्ते । स्यादिति ॥ २१ ॥

कर्मधर्मो वा प्रवणवत् ॥ २२ ॥

ननु मास्तु कर्तृपरिच्छेदः तथा ऽपि करञ्जवृक्षादिपूजनस्य कृष्णमृद्धति देशे आचारात् तादृशभूः कर्मधर्मः कर्माङ्गम् । वैश्वदेवकर्मणि प्राचीनप्रवणदेशवत् ॥ २२ ॥

तुल्यं तु कर्तृधर्मेण ॥ २३ ॥

यथा कृष्णवर्णकर्त्रा ऽनुष्ठिते कर्मणि कृष्णवर्णो नाङ्गंतथा देशवर्णो ऽपीत्यभिप्रायेण समाधत्ते । तुल्यमिति ॥ २३ ॥

।त्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥

व्याकरणशास्त्रं प्रमाणं न वेति संशये पूर्वपक्षमाह । प्रयोगेति। प्रयोगोत्पत्तौ प्रयोगनियमे गौरित्येव प्रयोक्तव्यं न तु गावीति नियमे व्याकरणस्य निर्मूलत्वेनाशास्त्रत्वाच्छब्देषु गोगाव्यादि शब्देषु न व्यवस्था स्यात् ॥ २४ ॥

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २५ ॥

सिद्धान्तमाह । शब्दइति । शब्दे साधुशब्दे प्रयत्नेन स्वरवर्णादि-लोपभीतिपूर्वकतया निष्पत्तेः उत्पत्तेः वर्णस्वरादिलोपे अपरा-धभागित्वस्य दोषयुक्तत्वस्य श्रवणमप्यस्ति अतः गोशब्दः साधुः गावीशब्दस्त्वसाधुरिति फलितोऽर्थः ॥ २५ ॥

अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥

ननु गोशब्दस्य गावीशब्दस्योभयोरप्यर्थवत्त्वमास्तामत आह। अन्याय इति। अनेकशब्दत्वमनेकशब्दवाच्यत्वमन्याय्यमनुचितम् । अनेकपदेषु शक्तिकल्पनायां गौरवादिति भावः(१) ॥ २६ ॥

तत्र तत्त्वमभियोगविशेषात्स्यात् ॥ २७ ॥

तत्र संस्कृतशब्दे तत्त्वं साधुत्वज्ञानम् अभियोगविशेषात् व्याकरणशास्त्राभ्यासजनितसंस्कारविशेषात् ॥ २७ ॥

तदशक्तिश्चानुरूपत्वात् ॥ २८ ॥

ननु गाव्यादिपदाद् गोबोधश्च शक्तिभ्रमाद्वाच्यः । भ्रमे मूलं किमित्याकाङ्क्षायामाह । तदिति । तत्र गोपदे अशक्तिः किंचि-त्करणापाटवदोषादुच्चारणासामर्थ्यं क्वचित्कल्प्यते। नन्वेतावता गावीशब्दे गवार्थत्वं कथमत्राह । तदनुरूपत्वात् गोशब्दसदृशत्वात् । अयमभिप्रायः केन चिद्गोशब्दोच्चारणेच्छावता करणे दोषवशेन

---

(१) साम्नादिमति अर्थे गोशब्द एव वाचक इतिवद् गावीशब्द एव वाचक इति नियमस्याप्यङ्गीकारे अष्टदोषग्रस्तविकल्पापत्तेरित्यर्थः । दूर्वादिशब्दे तु अगत्या तत्स्वीकार इति बोध्यम् ।

गावीत्युक्तं विप्रेण तदभिप्रायं ज्ञात्वा गौरानीता समीपस्थो गावीशब्दो गोवाचक इति भ्रमेण गावीशब्दं प्रायुङ्क्त तद्दृष्ट्वाऽन्यः एवमन्यपरम्परया गोशक्तिभ्रम इति भावः ॥ २८ ॥

## एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २९ ॥

एवमेकदेशविकारेऽप्यर्थस्मरणाङ्गीकारादेव अश्मकैरागच्छतीति पञ्चमीस्थाने तृतीयाप्रयोगे ऽपि विभक्त्यर्थव्यत्यये अन्यस्योच्चारणे ऽपि अश्मकेभ्य इति समुदायैकदेशत्वादश्मकशब्दस्य तस्मादश्मकदेशस्मरणमिति । तथा गावीशब्दस्य गौरिति शब्दैकदेशत्वाद्गोस्मरणमुपपन्नमिति भावः ॥ २९ ॥

लोकवेदयोः शब्दार्थैक्यम् । अधि १० ।

## प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥

लोकवेदयोः शब्दार्थौ भिन्नौ उताभिन्नाविति संशये शब्दार्थौ भिन्नौ । देवासः भवन्ति कर्णेभिरिति रूपभेदात् । तमाना हि देवगवा वहन्तीति चार्थभेदादिति वहिः पूर्वपक्षे सिद्धान्तमाह । प्रयोगेति । पूर्वमुभयोर्भेद इति पूरणीयम् । प्रयोगस्य वाक्यस्य चोदना उच्चारणजन्यार्थप्रतीतिः तदभावात् । अभावप्रसङ्गात् । अयं भावः । वैदिकशब्दार्थयोः भिन्नत्वे तयोरपूर्वत्वेन शक्तिग्रहासम्भवादर्थज्ञानं न स्यादिति । अतः शब्दानामविभागादभेदादर्थैक्यमपि । लोके गृहीतशक्तिकत्वात्तदुपपत्तिः(१) ॥ ३० ॥

आकृतिशक्तिः । वर्णकान्तरम् ।

## अद्रव्यशब्दत्वात् ॥ ३१ ॥

पदानां व्यक्तौ जातौ वा शक्तिरिति संशये पूर्वपक्षमाह । अद्रव्येति । जातिवाचकत्वपक्षे अद्रव्यवाचकता स्यादित्यर्थः । एका देया द्वे देये इत्यादौ जातेरेकत्वेन संख्यान्वयासम्भवादिष्टापत्तिर्न सम्भवतीति भावः ॥ ३१ ॥

## अन्यदर्शनाच्च ॥ ३२ ॥

इतो ऽपि न जातिरर्थ इत्याह । अन्यति । अन्यशब्दार्थस्य दर्शनात् । यदि पशुरुपाकृतः पलायेतान्यं पशुमुपाकुर्यादित्यत्र

---

(१) यूपादिशब्दानां तु प्रसिद्धपदसमभिव्याहाराच्छक्तिग्रह उपपद्यते इति भावः ।

अन्यपदार्थस्य पशुपदार्थेनान्वयो वाच्यः । स न सम्भवति । तव मतेः जातेः पशुपदार्थस्यैकत्वेन तत्रान्यपदार्थान्वयासम्भवात् । जातेः पलायनासम्भवात्(१) । अतो व्यक्तावेव शक्तिरिति पूरणीयम् ॥३२॥

## आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥

सिद्धान्तमाह । आकृतिरिति । क्रियार्थत्वात् क्रियाप्रयोजनत्वात् । आकृतिः जातिः पदवाच्या । अयं भावः । व्यक्तिशक्तिवादिना ऽप्यवश्यं जातिर्भासत इति वाच्यम् । अन्यथा श्येनचितं चिन्वीतेतिवाक्यार्थानुपपत्तिः । तथा हि । धात्वर्थे श्येनः किं करणत्वेनान्वेत्युत कर्मत्वेन । नाद्यः । कर्मण्यग्न्याख्यायामिति पाणिनिसूत्रम् । कर्मवाचके श्येनादिरूपे उपपदे धात्वर्थे ऽपि कर्मणि अग्न्याख्यस्थण्डिलसंज्ञायां कर्तृव्यायां चिनोतेर्धातोः क्विप् स्यादिति तदर्थः । इत्थं चोक्तसूत्रानुसारेण श्येनसदृशे लक्षणां स्वीकृत्य श्येनसदृशं चीयमानं स्थण्डिलं चयनक्रियया भावयेदिति वाक्यार्थः संपद्यते । करणत्वेनान्वये कर्मवाचकोपपदाभावेन निरुक्तसूत्रविरोधः । अतो ऽवश्यं कर्मत्वेनान्वये सादृश्यलक्षणया कर्मत्वं श्येनपदार्थस्य संपादनीयम् । चयनक्रियायाः फलं श्येनसादृश्यम् । तादृशगुणस्यैव श्येनचितं चिन्वीत स्वर्गकाम इत्यत्र स्वर्गसाधनत्वं प्रतीयते । एवं सति केवलव्यक्तिशक्तिवादिना यावद्व्यक्तिसादृश्यमिष्यतउत यत्किंचिद्व्यक्तिसादृश्यम् । सर्वव्यक्तिसादृश्यस्यैकत्रासंभवान्नाद्यः । न द्वितीयः । यद्व्यक्तिसादृश्यं वेदतात्पर्यविषयीभूतं तन्नाशे ऽनुष्ठानलोपापत्तिः । तात्पर्यविषयीभूतवस्तुनो ऽभावादगत्या श्येनत्वाश्रयसादृश्यमिति वाच्यम् । तथा च श्येनत्वबोधस्यावश्यकतया तद्बोधार्थं तत्रापि शक्तिस्तवावश्यकी । तथा सति तत्रैव

---

(१) एवं वृक्षौनित्यादौ लिङ्गसंख्याकारकान्वयाऽसम्भवो ऽपि द्रष्टव्यः । न च व्यक्तेर्वाच्यत्वे आनन्त्यव्यभिचाराविति वाच्यम् । जातेरुपलक्षणत्वाङ्गीकारात् । तावतैव धर्मान्तरप्रकारकबोधापत्तिवारणे तत्र शक्तिकल्पनाया अनुपयोगात् । अत एव पुरुषो देवदत्त इत्यादौ एकार्थकत्वरूपसामानाधिकरण्योपपत्तिरिति पूर्वपक्ष्यभिप्रायः ।

